सांख्यवेदिनः ॥ योगिनः पुरुषं विप्राः कर्म मीमांसका जनाः ॥ ५६ ॥ विभुं वैशेषिकाद्याश्च चिच्छक्तिं शक्तिचिंतकाः ॥ ब्रह्माद्वितीयं तद्वंदे
नानारूपक्रियास्पदम् ॥ ५७ ॥ भक्तिर्भगवतः पुंसां भगवद्रूपकारिणी ॥ तां लब्ध्वा चापरं लाभं वांछति विना पशुम् ॥ ५८ ॥
भगवद्विमुखा ये तु नराः संसारिणो द्विजाः ॥ तेषां मुक्तिर्भवाटव्या नास्ति सत्संगमंतरा ॥ ५९ ॥ साधवः समुदाचाराः सर्वलोकहिता
वहाः ॥ दीनानुकंपिनो विप्राः प्रपन्नास्तारयंति हि ॥ ६० ॥ यूयं धन्यतमा लोके मुनयः साधुसंमताः ॥ यन्मुखाद्वासुदेवस्य कीर्ति
पल्लवनूतनम् ॥ ६१ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिर्लोकमंगलम् ॥ स्तस्मारितो हरिः साक्षात्सर्वकारणकारणम् ॥ ६२ ॥ ॐ ॥ इति श्रीनारदीय
पुराणे बृहदुपाख्याने उत्तरभागे महापुराणे एतत्पुराणश्रवणादिफलनिरूपणं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ समाप्तमिदं सोत्तमं नारदीयं महापुराणम् ॥

---

इदं श्रीनारदीय महापुराणं मुम्बय्यां क्षेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रागारे मुद्रयित्वा प्रकाशितम् ।
संवत् १९८०, शके १८४५.